Jayaram Thiagarajan

श्रीरामजयम

# नित्याह्निकम्

(सस्वरम्)

(त्रिकाल सन्ध्यावन्दन, शिवश्चायतनपूजाभाग्यसूक्त, ऐकमत्यसूक्तादि २४ प्रधान विषयैः सहितम्)

# NITYAHNIKAM

*(The Daily Routines of Every Brahmin)*




PUBLISHED BY

**R.S. VADHYAR & SONS**

BOOK-SELLERS & PUBLISHERS

KALPATHY, PALGHAT - 678 003

2003

Rs. 20.00

ध्यानम्

मूले कल्पद्रुमस्य द्रुतकनकनिभं चारुपद्मासनस्थं
वामाङ्कारूढ गौरीनिबिड कुचभराभोगगाढोपगूढम् ।
नानालङ्कार दीप्तं वरपरशुमृगाभीतिहस्तं त्रिनेत्रं
वन्दे बालेन्दुमौलिं गजवदनगुहाश्लिष्टपार्श्वं महेशम् ॥

पञ्चोपचारपूजा

| | | | |
|---|---|---|---|
| लं पृथिव्यात्मने | गन्धं | कल्पयामि | । |
| हं आकाशात्मने | पुष्पं | कल्पयामि | । |
| यं वाय्वात्मने | धूपम् | आघ्रापयामि | । |
| रं वह्न्यात्मने | दीपं | दर्शयामि | । |
| वं अमृतात्मने | अमृतं | निवेदयामि | । |
| सं सर्वात्मने | सर्वोपचारान् | समर्पयामि | । |

मूलमन्त्रः

'ओं ह्रीं नमश्शिवाय'

अष्टोत्तरशतं वा ; द्वात्रिंशतं वा ; यथा शक्ति , जपेत्
अनन्तरं 'ओं ह्रां सर्वज्ञशक्तिधाम्ने हृदयाय नमः' इत्यादि ध्यान पञ्चोपचार पूजापर्यन्तं जपेत् ।

**श्री साम्बपरमेश्वरः प्रीयताम्**

**॥ ओं तत् सत् ब्रह्मार्पणमस्तु ॥**



## १२. शिव पञ्चायतन *पूजा

(भस्म-रुद्राक्षधारी ; उदङ्मुखः पूजोपकरणानि संभृत्य पूजाम् आरभेत)

'नमो ब्रह्मण्य देवाय+नमो नमः' (इति नमस्कृत्य) 'अपसर्पन्तु+समारभे' (इति उपविश्य) 'पृथ्वि त्वया+आसनं कुरु' इत्यासनं परिकल्प्य ; श्रीगुरुं ध्यात्वा ; श्रीशक्ति पञ्चाक्षरी महामन्त्र जपं कृत्वा ; संकल्पं कुर्यात् ।

शुक्लांबरधरं+शान्तये, ओं भूः ; ममोपात्त+प्रीत्यर्थं अस्माकं सकुटुम्बानां, क्षेम-स्थैर्य वीर्य विजय-आयुरारोग्यैश्वर्याणाम् अभिवृध्यर्थं, धर्मार्थ-काम-मोक्ष-चतुर्विध फल पुरुषार्थ सिध्यर्थं, सर्वारिष्टशान्त्यर्थं, सर्वाभीष्ट सिध्यर्थं, सपरिवार सोमास्कन्द परमेश्वर चरणारविन्दयोः अचञ्चल निष्कपट भक्तिसिध्यर्थं, यथाशक्ति ध्यानावाहनादिषोडशोपचारैः परिवारसहित साम्बशिव पूजां करिष्ये । कलश-शंख-आत्मपीठ पूजां च करिष्ये (इति संकल्प्य, अप उपस्पृश्य )

आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।
देवतापूजनार्थाय घण्टानादं करोम्यहम् ॥

(इति घण्टानादं कृत्वा)

---

* आदित्यमंबिकां विष्णुं गणनाथं महेश्वरम् ।
पञ्चयज्ञपरो नित्यं गृहस्थः पञ्च पूजयेत् ॥

इति धर्मशास्त्रानुसारेण यथाकुलाचारं शिवपञ्चायतन पूजां ; विष्णु-गणेशादि-पञ्चायतन पूजां वा सर्वेभ्यःप्राप्त्यर्थं यथावकाशं, विस्तरेण-संग्रहेण वा कुर्यात् ।

## कलश पूजा

कलशाय नमः दिव्य गन्धान् धारयामि। गङ्गायै नमः यमुनायै नमः, गोदावर्यै नमः, सरस्वत्यै नमः, नर्मदायै नमः, सिन्धवे नमः, कावेर्यै नमः, सप्तकोटि महातीर्थान्यावाहयामि ।
(कलशं स्पृष्ट्वा ; जपं कुर्यात् ।)

ओम् 'आपो वा इदꣳसर्वम्+आप ओम्—

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृ गणाः स्मृताः ॥ १
कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ।
अंगैश्च सहिताः सर्वे कलशांबु समाश्रिताः ॥ २
गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ ३
सर्वे समुद्राः सरितः तीर्थानि च ह्रदाः नदाः ।
आयान्तु शिव पूजार्थं दुरितक्षय कारकाः ॥ ४

'ओं भूर्भुवः सुवो भूर्भुवः सुवः'
(इति कलशजलेन सर्वोपकरणानि प्रोक्ष्य)

## शंख पूजा—

कलशजलेन शंखं प्रक्षाल्य, पुनः कलशजलेन शंखं गायत्र्या प्रपूर्य, पाञ्चजन्याय नमः दिव्यगन्धान् धारयामि ।



(शंख मूले) ब्रह्मणे नमः ; (शंखमध्ये) जनार्दनाय नमः ; शंखाग्रे) चन्द्रशेखराय नमः ; इति अभ्यर्च्य ; शंखं स्पृष्ट्वा जपेत् ।

शंखं चन्द्रार्कदैवत्यं मध्ये वरुणसंयुतम् ।
पृष्ठे प्रजापतिश्चैव अग्रे गङ्गा सरस्वती ॥ १
त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया ।
शंखे तिष्ठन्ति विप्रेन्द्राः तस्माच्छंखं प्रपूजयेत् ॥ २
त्वं पुरा सागरोत्पन्नः विष्णुना विधृतः करे ।
पूजितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ॥ ३
गर्भा देवारिनारीणां विशीर्यन्ते सहस्रधा ।
तव नादेन पाताळे पाञ्चजन्य नमोऽस्तु ते ॥ ४

पाञ्चजन्याय विद्महे पावमानाय धीमहि । तन्नः शंखः प्रचोदयात् (इति शंखगायत्रीं पञ्चवारं जपित्वा ।)

अग्नेर्मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहवः समिन्धते । विश्वस्यां विशि प्रविविशिवाꣳसमीमहे स नो मुञ्चत्वꣳहसः (इति शंखजलं किञ्चित् कलशजले आसिच्य शिष्टजलेन)

'ओं भूर्भुवः सुवो भूर्भुवः सुवः' इति सर्वोपकरणानि आत्मानं च प्रोक्ष्य, कलशोदकेन पुनश्च शंखं गायत्र्या पूरयित्वा ।

आत्मपूजा—

आत्मने नमः दिव्यगन्धान् धारयामि ।

आत्मने नमः, 'अन्तरात्मने नमः, जीवात्मने नमः, ३

योगात्मने नमः, परमात्मने नमः, ज्ञानात्मने नमः, ६

समस्तोपचारान् समर्पयामि ।

देहो जीवालयः प्रोक्तः जीवो देवः सनातनः ।

त्यजेदज्ञाननिर्माल्यं सोऽहंभावेन पूजयेत् ॥ ध्यात्वा

पीठ पूजा—

1. आधारशक्त्यै नमः
2. मूलप्रकृत्यै नमः
3. आदि कूर्माय नमः
4. आदिवराहाय नमः
5. अनन्ताय नमः
6. पृथिव्यै नमः
7. रत्नमण्टपाय नमः
8. रत्नवेदिकायै नमः
9. स्वर्णस्तम्भाय नमः
10. श्वेतच्छत्राय नमः
11. कल्पकवृक्षाय नमः
12. क्षीरसमुद्राय नमः
13. सितचामराभ्यां नमः
14. योगपीठासनाय नमः

समस्तोपचारान् समर्पयामि

वेदान्तवेद्याखिल विश्वमूर्ते
विभो विरूपाक्ष विशेषशून्य ।
विश्वेश्वराशेषगणेशवन्द्य
कवाटमुद्घाटय कालकाल ॥



नन्दिकेश्वर सर्वज्ञ शिवध्यानपरायण ।
महेश्वरस्य पूजार्थम् अनुज्ञां दातुमर्हसि ॥

इति घण्टानादं कृत्वा, संमार्ज्य, निर्माल्यमुद्धृत्य, देवताः स्नानपीठे स्थापयेत् । यथा—

'मध्ये शंभुः - आग्नेय्यां सूर्यः नैरृत्यां विघ्नेश्वरः वायव्याम् अम्बिका - ऐशान्यां विष्णुः'— इति क्रमेण शिवलिङ्गादीनि तत्तत्स्थानेषु स्थापयित्वा ; तत्पुरतः पञ्च कलशांश्च (चतसृषु दिक्षु चतुरः ; मध्ये एकं च) स्थापयित्वा ; लघुन्यासपूर्वकं देवताः स्वदेहे तत्तदंगेषु स्थापयेत् ।

लघुन्यासः

अथातः श्रीरुद्र स्नानार्चनाभिषेक विधिं व्याख्यास्यामः ।

1. प्रजनने ब्रह्मा तिष्ठतु
2. पादयोः विष्णुस्तिष्ठतु
3. हस्तयोः हरस्तिष्ठतु
4. बाह्वोः इन्द्रस्तिष्ठतु
5. जठरे अग्निस्तिष्ठतु
6. हृदये शिवस्तिष्ठतु
7. कण्ठे वसवस्तिष्ठन्तु
8. वक्त्रे सरस्वती तिष्ठतु
9. नासिकयोः वायुः तिष्ठतु
10. नयनयोः चन्द्रादित्यौ तिष्ठेताम्
11. कर्णयोः अश्विनौ तिष्ठेताम्
12. ललाटे रुद्राः तिष्ठन्तु
13. मूर्धनि आदित्यास्तिष्ठन्तु
14. शिरसि महादेवस्तिष्ठतु
15. शिखायां वामदेवस्तिष्ठतु
16. पृष्ठे पिनाकी तिष्ठतु
17. पुरतः शूली तिष्ठतु
18. पार्श्वयोः शिवाशंकरौ तिष्ठेताम्
19. सर्वतो वायुस्तिष्ठतु

20. ततो बहिः सर्वतोऽग्निर्ज्वालामालापरिवृतस्तिष्ठतु

21. सर्वेष्वङ्गेषु सर्वा देवता यथास्थानं तिष्ठन्तु

22. मां सकुटुम्बं रक्षन्तु

[अग्निर्मे वाचिश्रितः इत्यादि मन्त्रैः यथालिङ्गम् अङ्गानि संमृश्य]

अग्निर्मे वाचि श्रितः । वाग्घृदये । हृदयं मयि ।

अहममृते । अमृतं ब्रह्मणि ।

वायुर्मे प्राणे श्रितः । प्राणो हृदये । हृदयं....ब्रह्मणि ।

सूर्यो मे चक्षुषि श्रितः । चक्षुर् हृदये । हृदयं....ब्रह्मणि ।

चन्द्रमा मे मनसि श्रितः । मनो हृदये । हृदयं....ब्रह्मणि ।

दिशो मे श्रोत्रे श्रिताः । श्रोत्रꣳहृदये । हृदयं....ब्रह्मणि ।

आपो मे रेतसि श्रिताः । रेतो हृदये । हृदयं....ब्रह्मणि ।

पृथिवी मे शरीरे श्रिता । शरीरꣳहृदये । हृदयं....ब्रह्मणि ।

ओषधिवनस्पतयो मे लोमसु श्रिताः । लोमानि हृदये ।
हृदयं....ब्रह्मणि ।



इन्द्रो मे बले श्रितः । बलꣳहृदये । हृदयं....ब्रह्मणि ।

पर्जन्यो मे मूर्ध्नि श्रितः । मूर्धा हृदये । हृदयं....ब्रह्मणि ।

ईशानो मे मन्यौ श्रितः । मन्युर् हृदये । हृदयं....ब्रह्मणि ।

आत्मा म आत्मनि श्रितः । आत्मा हृदये । हृदयं मयि ।

अहममृते । अमृतं ब्रह्मणि ।

पुनर्म आत्मा पुनरायुरागात् । पुनः प्राणः पुनराकूत मागात् ।

वैश्वानरो रश्मिभिर्वावृधानः । अन्तस्तिष्ठत्व मृतस्य गोपाः ।

(अथात्मानं शिवात्मानं श्रीरुद्ररूपं ध्यायेत्)

शुद्धस्फटिक संकाश त्रिनेत्र पञ्चवक्त्रकम् ।
गङ्गाधरं दशभुजं सर्वाभरण भूषितम् ॥ १
नीलग्रीवं शशाङ्काङ्कं नाग यज्ञोपवीतिनम् ।
व्याघ्र चर्मोत्तरीयं च वरेण्यम् अभयप्रदम् ॥ २
कमण्डल्वक्षसूत्रे च दधानं शूलपाणिनम् ।
ज्वलन्तं पिङ्गलजटं शिखामध्योदधारिणम् ॥ ३
वृषस्कन्ध समारूढं उमादेहार्ध धारिणम् ।
अमृतेनाप्लुतं हृष्टं दिव्यभोग समन्वितम् ॥ ४
दिग्देवता समायुक्तं सुरासुर नमस्कृतम् ।
नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ॥ ५
सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् ॥ ६

( एवं ध्यात्वा द्विजः सम्यक् देवयजनमारभेत् )

आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः ।
आराधयामि भक्त्या त्वामनुगृहाण महेश्वर ॥
हृत्पद्मकर्णिका मध्यात् उमया सह शङ्कर ।
आगच्छत्वं महादेव सर्वैरावरणैः सह ॥

आत्वा वहन्तु हरयः सचेतसः
श्वेतैरश्वैः सह केतुमद्भिः ।
वाताजितैर्बलवद्भिर्मनोजवैः
आयाहि शीघ्रं मम हव्याय शर्वोम् ॥

॥ इति लघुन्यासः ॥

---

## शिवपञ्चायतन पूजायां षोडशोपचार पूजा

### ध्यानावाहने

ओम् - गणानां त्वा गणपतिꣳहवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ ओं भूर्भुवस्सुवरोम् अस्मिन् बिम्बे महागणपतिं ध्यायामि आवाहयामि ।



त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय-माऽमृतात् ॥ सद्योजातं प्रपद्यामि । ओं भूर्भुवःसुवरोम् अस्मिन् लिङ्गे सोमास्कन्द परमेश्वरं ध्यायामि । आवाहयामि ।

जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः । ओं भूर्भुवःसुवरोम् अस्मिन् बिम्बे अम्बिकां ध्यायामि । आवाहयामि ।

सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । सभूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् ॥ ओं भूर्भुवःसुवरोम् अस्मिन् साळग्रामचक्रे श्रीभूमी समेत श्रीमहाविष्णुं ध्यायामि । आवाहयामि ।

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रोचनम् । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत एष ते योनिः सूर्याय त्वा भ्राजस्वते ॥ ओं भूर्भुवःसुवरोम् अस्मिन् स्फटिकबिम्बे छायासंज्ञासमेत श्रीसूर्यनारायणं ध्यायामि । आवाहयामि ।

(अनन्तरं सद्योजातादि पञ्चकलशेषु पूजा)

१. सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भवे नातिभवे भवस्व माम् । भवोद्भवाय नमः । ओं भूर्भुवःसुवरोम् अस्मिन् पश्चिमकलशे सद्योजातं ध्यायामि । आवाहयामि ।

२. वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ ओं भूर्भुवः सुवरोम् अस्मिन् उत्तरकलशे वामदेवं ध्यायामि । आवाहयामि ।

३. अघोरेभ्योऽथ घोरेभ्यो घोर घोरतरेभ्यः । सर्वेभ्यः सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ ओं भूर्भुवः सुवरोम् । अस्मिन् दक्षिणकलशे अघोरं ध्यायामि । आवाहयामि ।

४. तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ओं भूर्भुवःसुवरोम् अस्मिन् पूर्वकलशे तत्पुरुषं ध्यायामि । आवाहयामि ।



५. ईशानः सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ ओं भूर्भुवःसुवरोम् अस्मिन् मध्यमकलशे ईशानं ध्यायामि । आवाहयामि ।

स्वामिन् सर्वजगन्नाथ यावत्पूजावसानकम् ।
तावत् त्वं प्रीतिभावेन लिङ्गेऽस्मिन् सन्निधिं कुरु ।

आवाहितो भव । स्थापितो भव । सन्निहितो भव । ३
सन्निरुद्धो भव । अवकुण्ठितो भव । सुप्रीतो भव । ६
सुप्रसन्नो भव । वरदो भव । सर्वाभीष्टप्रदो भव ।९

स्वागतमस्तु । प्रसीद प्रसीद ।

आसनाद्युपचारः

सद्योजाताय वै नमो नमः । आसनं समर्पयामि ।
भवेभवे नातिभवे भवस्व माम् । पाद्यं समर्पयामि ।
भवोद्भवाय नमः । अर्घ्यं समर्पयामि ।
वामदेवाय नमः । आचमनीयं समर्पयामि ।
ज्येष्ठाय नमः । मधुपर्कं समर्पयामि ।
श्रेष्ठाय नमः । स्नानं समर्पयामि ।
स्नानानन्तरं आचमनीयं समर्पयामि ।

रुद्राय नमः । वस्त्रोत्तरीयं समर्पयामि ।

कालाय नमः । यज्ञोपवीताभरणं समर्पयामि ।

कलविकरणाय नमः । गन्धाक्षतान् समर्पयामि ।

बलविकरणाय नमः । पुष्पाणि समर्पयामि ।

बलाय नमः । धूपम् आघ्रापयामि ।

बलप्रमथनाय नमः । दीपं दर्शयामि ।

सर्वभूत दमनाय नमः । नैवेद्यं निवेदयामि ।

मनोन्मनाय नमः । ताम्बूलं समर्पयामि ।

यो वै तां ब्रह्मणो वेद । अमृतेनावृतां पुरीम् । तस्मै ब्रह्म च ब्रह्मा च । आयुः कीर्तिं प्रजां ददुः ॥

सपरिवाराय साम्बपरमेश्वराय नमः सर्वोपचारार्थे कर्पूरनीराजनं प्रदर्शयामि ।

अघोरेभ्यो....रुद्ररूपेभ्यः। तत्पुरुषाय....प्रचोदयात् ।
ईशानः....सदाशिवोम् । (इति जपित्वा ।)
सोमास्कन्द परमेश्वरादीनाम् अभिषेकं कुर्यात् ।
श्रीरुद्राभिषेककर्मणि एकादशाभिषेक द्रव्याणि ; तत्क्रमः



प्रथमं गन्धतैलं च द्वितीयं पञ्चगव्यकम् ।
पञ्चामृतं तृतीयं च चतुर्थं [1]घृतमेव च ॥
पञ्चमं [2]पयसा स्नानं [3]दध्ना स्नानं तु षष्ठकम् ।
सप्तमं मधुना स्नानम् अष्टमं चेक्षु[4] खण्डकम् ॥
नवमं [5]निम्बतोयं च दशमं नालिकेरकम् ।
एकादशं गन्धतोयं अथ कुम्भाभिषेचनम् ॥

पुरुषसूक्ताभिषेक कर्मणि (16) षोडशाभिषेक द्रव्याणि, तेषां क्रमः फलं च—

तोयं तु शान्तिकं प्रोक्तं गन्धतैलं सुखप्रदम् ।
पञ्चगव्यं पवित्रं च जयं पञ्चामृतं तथा ॥
घृतं मोक्षप्रदं विद्यात् क्षीरमायुष्यवर्धनम् ।
दधि संपत्प्रदं चैव मधु माधवतोषदम् ॥
इक्षुसारं बलारोग्यं [6]लिकुचं ज्ञानवर्धनम् ।
नालिकेरोदकं चैव सालोक्यानन्ददायकम् ॥
रजनी राजवश्यं च पिष्टं तु ऋणमोचनम् ।
आमलकं पित्तशमनं क्षौद्रं वित्तविवर्धनम् ॥
द्राक्षा रूक्षहरा नित्यं दाडिमी राज्यदायिका ।
गन्धोदकैश्च संस्नाप्य ज्ञानवान् भक्तिमान् भवेत् ॥
इह लोके सुखं भुक्त्वा अन्ते वैकुण्ठमाप्नुयात् ॥

---

1. घृतम् Ghee 2. पयस् milk 3. दधि Curd 4. इक्षु Sugarcane 5. निम्बतोय lime juice 6. लिकुच lime. क्षौद्रं Juice of चम्पक पुष्प. रजनी Turmeric.

रुद्र-चमक-पुरुषसूक्तादिभिः यथावकाशम् अभिषिच्य; 'सद्यो-जातम्' इत्यादि पञ्चभिर्मन्त्रैः क्रमेण पञ्चकलशजलैरभिषिच्य; धौतवस्त्रेण उद्वर्तनं कृत्वा; देवताः पूजापीठे स्थापयेत्।

आवाहिताभ्यः सर्वाभ्यो देवताभ्यो नमः वस्त्रोत्तरीयं समर्पयामि।

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥

आवाहिताभ्यः सर्वाभ्यो देवताभ्यो नमः दिव्य परिमळ गन्धान् धारयामि। अक्षतान् समर्पयामि पुष्पाणि समर्पयामि।

त्रिदळं त्रिगुणाकारं त्रिनेत्रं च त्रियायुधम्।
त्रिजन्मपापसंहारं एकबिल्वं शिवार्पणम्।
बिल्वपत्रं समर्पयामि।

श्रीमहागणपतेः अर्चना*

| | | | |
|---|---|---|---|
| ओं सुमुखाय | नमः | ओं विकटाय | नमः |
| एकदन्ताय | नमः | विघ्नराजाय | नमः |
| कपिलाय | नमः | विनायकाय | नमः |
| गजकर्णकाय | नमः | धूमकेतवे | नमः |
| लम्बोदराय | नमः | गणाध्यक्षाय | नमः |

* दूर्वाङ्कुरैः गणेशस्य अर्चना प्रशस्ता।



| | | | |
|---|---|---|---|
| ओं फालचन्द्राय | नमः | ओं हेरम्बाय | नमः |
| गजाननाय | नमः | स्कन्दपूर्वजाय | नमः |
| वक्रतुण्डाय | नमः | सिद्धिविनायकाय | नमः |
| शूर्पकर्णाय | नमः | विघ्नेश्वराय | नमः |

श्री शिवार्चना

| | | | | | |
|---|---|---|---|---|---|
| ओं भवाय | देवाय | नमः | ओं रुद्राय | देवाय | नमः |
| शर्वाय | देवाय | नमः | उग्राय | देवाय | नमः |
| ईशानाय | देवाय | नमः | भीमाय | देवाय | नमः |
| पशुपतये | देवाय | नमः | महते | देवाय | नमः |

श्री अम्बिकार्चना

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ओं भवस्य | देवस्य | पत्न्यै | नमः | ओं रुद्रस्य | देवस्य | पत्न्यै | नमः |
| शर्वस्य | देवस्य | ,, | नमः | उग्रस्य | देवस्य | ,, | नमः |
| ईशानस्य | देवस्य | ,, | नमः | भीमस्य | देवस्य | ,, | नमः |
| पशुपतेः | देवस्य | ,, | नमः | महतो | देवस्य | ,, | नमः |

श्री साम्बपरमेश्वरार्चना

| | | | | | |
|---|---|---|---|---|---|
| भवान्यै | नमः | भवाय | नमः | पादौ | पूजयामि। |
| जगन्मात्रे | नमः | जगत्पित्रे | नमः | जंघे | पूजयामि। |
| मृडान्यै | नमः | मृडाय | नमः | जानुनी | पूजयामि |
| रुद्राण्यै | नमः | रुद्राय | नमः | ऊरू | पूजयामि। |
| काळ्यै | नमः | कालान्तकाय | नमः | कटिं | पूजयामि। |
| नगेन्द्रकन्यकायै | नमः | नागेन्द्राभरणाय | नमः | नाभिं | पूजयामि। |

| | | | | |
|---|---|---|---|---|
| स्तवप्रियायै | नमः | स्तव्याय | नमः | स्तनौ पूजयामि । |
| भवघ्न्यै | नमः | भवनाशनाय | नमः | भुजद्वयं पूजयामि । |
| कम्बुग्रीवायै | नमः | कालकण्ठाय | नमः | कण्ठं पूजयामि । |
| मायायै | नमः | महेश्वराय | नमः | मुखमण्डलं पूजयामि । |
| ललितायै | नमः | लास्यप्रियाय | नमः | ललाटान्तं पूजयामि । |
| शिवायै | नमः | शिवाय | नमः | शिरः पूजयामि । |
| प्रणतार्ति हरायै | नमः | प्रणतार्ति हराय | नमः | पुनः पादौ पूजयामि । |
| सर्वेश्वर्यै | नमः | सर्वेश्वराय | नमः | सर्वाण्यङ्गानि पूजयामि । |

**श्री महाविष्णोः अर्चना**

| | | | |
|---|---|---|---|
| ओं अच्युताय | नमः | हृषीकेशाय | नमः |
| अनन्ताय | नमः | पद्मनाभाय | नमः |
| गोविन्दाय | नमः | दामोदराय | नमः |
| केशवाय | नमः | सङ्कर्षणाय | नमः |
| नारायणाय | नमः | वासुदेवाय | नमः |
| माधवाय | नमः | प्रद्युम्नाय | नमः |
| गोविन्दाय | नमः | अनिरुद्धाय | नमः |
| विष्णवे | नमः | | |
| मधुसूदनाय | नमः | पुरुषोत्तमाय | नमः |
| त्रिविक्रमाय | नमः | अधोक्षजाय | नमः |
| वामनाय | नमः | नरसिंहाय | नमः |
| श्रीधराय | नमः | अच्युताय | नमः |



| | | | |
|---|---|---|---|
| ओं जनार्दनाय | नमः | ओं हरये | नमः |
| उपेन्द्राय | नमः | श्रीकृष्णाय | नमः |

श्रीभूमीसमेत श्रीमहाविष्णवे नमः

सीता लक्ष्मण भरतशत्रुघ्न हनूमत्समेत श्रीरामचन्द्र स्वामिने नमः ।

रुक्मिणी सत्यभामा समेत श्रीगोपालकृष्ण स्वामिने नमः ।

**श्री सूर्यनारायणार्चना**

| | | | |
|---|---|---|---|
| ओं मित्राय | नमः | ओं हिरण्यगर्भाय | नमः |
| रवये | नमः | मरीचये | नमः |
| सूर्याय | नमः | आदित्याय | नमः |
| भानवे | नमः | सवित्रे | नमः |
| खगाय | नमः | अर्काय | नमः |
| पूष्णे | नमः | भास्कराय | नमः |

छायासंज्ञासमेत श्रीसूर्यनारायण स्वामिने नमः

आवाहिताभ्यः सर्वाभ्यो देवताभ्यो नमः । नानाविध परिमळ पत्र पुष्पाणि समर्पयामि ।

धूपः—धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामस्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वार्मित्रस्य त्वा चक्षुषा प्रेक्षे मा भे र्मा संविक्था मा त्वा हिꣳसिषम्

आवाहिताभ्यः+नमः धूपम् आघ्रापयामि ।

दीपः—उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम ।

पशूꣳश्च मह्यमावह जीवनं च दिशो दिश ॥

मा नो हिꣳसी ज्जातवेदो गामश्वं पुरुषं जगत् ।

अबिभ्रदग्न आगहि श्रिया मा परिपातय ॥

आवाहिताभ्यः+नमः दीपं दर्शयामि ।

धूपदीपानन्तरम् आचमनीयं समर्पयामि ।

नैवेद्यम्—भूर्भुवःसुवः । ओंभूर्भुवःसुवः ।

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । देव सवितः प्रसुव । सत्यं त्वर्तेन परिषिञ्चामि । अमृतोपस्तरणमसि ।

1. प्राणाय स्वाहा 4. उदानाय स्वाहा

2. अपानाय स्वाहा 5. समानाय स्वाहा

3. व्यानाय स्वाहा 6. ब्रह्मणे स्वाहा

मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः ।

माध्वीर्नः सन्त्वोषधीः ॥



मधुनक्तमुतोषसि मधुमत्पार्थिवꣳरजः ।

मधु द्यौरस्तु नः पिता ॥

मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः ।

माध्वीर्गावो भवन्तु नः । मधु मधु मधु ।

आवाहिताभ्यः सर्वाभ्यः देवताभ्यो नमः दिव्यान्नं घृतगुळपायसं नालिकेर खण्डद्वयं कदलीफलं महानैवेद्यं निवेदयामि । मध्ये मध्ये अमृतपानीयं समर्पयामि । अमृतापिधानमसि । हस्तप्रक्षाळनं पादप्रक्षाळनं च समर्पयामि । आचमनीयं समर्पयामि ।

पूगीफलसमायुक्तं नागवल्लीदलैर्युतम् ।

कर्पूरचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

आवाहिताभ्यः+नमः कर्पूरताम्बूलं निवेदयामि, समस्तोपचारान् समर्पयामि ।

पञ्चमुखदीपः—सप्रथ सभां मे गोपाय । ये च सभ्याः सभासदः । तानिन्द्रियावतः कुरु । सर्वमायुरुपासताम् ।

अहे बुध्नियमन्त्रं मे गोपाय । यमृषयस्त्रैविदा विदुः ।

ऋचः सामानि यजूꣳषि । सा हि श्रीरमृता सताम् ।

पञ्च हूतो हवै नामैषः । तं वा एतं पञ्च हूतꣳसन्तम् ।
पञ्च होतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ।

आवाहिताभ्यः+नमः, पञ्चमुखदीपं दर्शयामि ।

आचमनीयं समर्पयामि ।

कर्पूर नीराजनम्--सोमो वा एतस्य राज्यमादत्ते । यो राजा सन् राज्यो वा सोमेन यजते । देवसुवामेतानि हवीꣳषि भवन्ति । एतावन्तो वै देवानꣳसवाः । त एवास्मै सवान् प्रयच्छन्ति । त एनं पुनः सुवन्ते राज्याय । देवसूराजा भवति ।

साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यꣳराज्यं महाराज्यमाधिपत्यम् ।

यो वैतां ब्रह्मणो वेद । अमृतेनावृतां पुरीम् ।

तस्मै ब्रह्म च ब्रह्मा च । आयुः कीर्तिं प्रजां ददुः ॥

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।



आवाहिताभ्यः सर्वाभ्यो देवताभ्यो नमः सर्वोपचारार्थे कर्पूरमंगळनीराजनं सन्दर्शयामि ।

बृहथ्सामक्षत्र भृद्वृद्धवृष्णियं त्रिष्टुभौजः शुभित मुग्रवीरम् । इन्द्र स्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष ॥ रक्षां धारयामि । (इति नीराजन रक्षां धारयेत्)

योऽपां पुष्पं वेद । पुष्पवान् प्रजावान् पशुमान् भवति । चन्द्रमा वा अपां पुष्पम् । पुष्पवान् प्रजावान् पशुमान् भवति । आवाहिताभ्यः........नमः वेदोक्त मन्त्रपुष्पं समर्पयामि ।

राजाधिराजाय प्रसह्य साहिने । नमो वयं वैश्रवणाय कुर्महे । स मे कामान् कामकामाय मह्यम् । कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय । महाराजाय नमः । सुवर्णपुष्पं समर्पयामि । पारिजातपुष्पं समर्पयामि ।

यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि विनश्यन्ति प्रदक्षिणपदे पदे ॥
प्रकृष्टपापनाशाय प्रकृष्टफलसिद्धये ।
प्रदक्षिणं करोमीश प्रसीद परमेश्वर ॥

॥ नमस्कारः ॥

गजाननं भूतगणाधिसेवितं
कपित्थजम्बूफलसारभक्षितम् ।
उमासुतं शोकविनाशकारणं
नमामि विघ्नेश्वरपादपङ्कजम् ॥ १

अगजाननपद्मार्कं गजाननमहर्निशम् ।
अनेकदं तं भक्तानाम् एकदन्तमुपास्महे ॥ २

हालास्यनाथाय महेश्वराय
हालाहलालंकृतकन्धराय ।
मीनेक्षणायाः पतये शिवाय
नमो नमः सुन्दरताण्डवाय ॥ ३

कृपासमुद्रं सुमुखं त्रिनेत्रं
जटाधरं पार्वतीवामभागम् ।
सदाशिवं रुद्रमनन्तरूपं
चिदम्बरेशं हृदि भावयामि ॥ ४

नमश्शिवाभ्यां नवयौवनाभ्यां
परस्पराश्लिष्टवपुर्धराभ्याम् ।
नगेन्द्रकन्यावृषकेतनाभ्यां
नमो नमः शङ्करपार्वतीभ्याम् ॥ ५

नमः शिवाय साम्बाय सगणाय ससूनवे ।
सनन्दिने सगङ्गाय सवृषाय नमो नमः ॥ ६



महादेवं महेशानं महेश्वरमुमापतिम् ।
महासेनगुरुं वन्दे महाभयनिवारणम् ॥ ७

ऋणरोगादिदारिद्र्य पापक्षुदपमृत्यवः ।
भयक्रोधमनःक्लेशाः नश्यन्तु मम सर्वदा ॥ ८

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ ९

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाकारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ १०

भानो भास्कर मार्ताण्ड चण्डरश्मे दिवाकर ।
आयुरारोग्यमैश्वर्यं श्रियं पुत्रांश्च देहि मे ॥ ११

अनायासेन सायुज्यं विना दैन्येन जीवनम् ।
देहि मे कृपया शंभो त्वयि भक्तिमचञ्चलाम् ॥ १२

आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजाविधिं न जानामि क्षमस्व परमेश्वर ॥ १३

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वर ॥ १४

अन्यथा शरणं नास्ति त्वमेव शरणं मम ।
तस्मात् कारुण्यभावेन रक्ष रक्ष महेश्वर ॥ १५

साम्ब....नमः, आवाहिताभ्यः....नमः अनन्तकोटि-प्रदक्षिणनमस्कारान् समर्पयामि ।

| | |
|---|---|
| 1. छत्रं धारयामि । | 5. आन्दोलिकाम् आरोपयामि । |
| 2. नृत्तं दर्शयामि । | 6. अश्वम् आरोपयामि । |
| 3. वाद्यं घोषयामि । | 7. गजम् आरोपयामि । |
| 4. गीतं श्रावयामि । | 8. रथम् आरोपयामि । |

समस्त राजोपचार देवोपचारान् समर्पयामि ।

देवता तर्पणम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 1. भवं | देवं | तर्पयामि । | 9. भवस्य | देवस्य | पत्नीं | तर्पयामि । |
| 2. शर्वं | ,, | ,, | 10. शर्वस्य | ,, | ,, | ,, |
| 3. ईशानं | ,, | ,, | 11. ईशानस्य | ,, | ,, | ,, |
| 4. पशुपतिं | ,, | ,, | 12. पशुपतेः | ,, | ,, | ,, |
| 5. रुद्रं | ,, | ,, | 13. रुद्रस्य | ,, | ,, | ,, |
| 6. उग्रं | ,, | ,, | 14. उग्रस्य | ,, | ,, | ,, |
| 7. भीमं | ,, | ,, | 15. भीमस्य | ,, | ,, | ,, |
| 8. महान्तं | ,, | ,, | 16. महतो | ,, | ,, | ,, |

आवाहित सर्वदेवतास्तर्पयामि ।

वेदपारायणम्——

ओम् अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ (ऋग्वेदः)



इषे त्वोर्जे त्वा वायवःस्थोपायवःस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे । (यजुर्वेदः)

अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ (सामवेदः)

शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं यो रभि स्रवन्तु नः । (अथर्वणवेदः)

अथातो दर्शपूर्णमासौ व्याख्यास्यामः । प्रातरग्निहोत्रं हुत्वा अन्यमाहवनीयं प्रणीय अग्नीनन्वादधाति । न गतश्रियोऽन्यमग्निं प्रणयति ॥ (श्रौतसूत्रम्)

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्म संस्थापनार्थाय संभवामि युगे युगे ॥ (पुराणम्)

समस्त वेदपारायणं समर्पयामि ।

आशीर्वादः

स्वस्ति मन्त्रार्थाः सत्याः सफलाः सन्त्विति भवन्तोऽनुगृह्णन्तु । १

अनेन पूजाविधानेन भगवान् सर्वात्मकः सपरिवारः श्रीसाम्बपरमेश्वरः सुप्रीतः सुप्रसन्नो वरदो भूत्वा मम सकुटुम्बस्य

क्षेम-स्थैर्य-धैर्य-वीर्य-विजयायुरारोग्यैश्वर्याणाम् अभिवृद्धि प्रदो भूयादिति भवन्तोऽनुगृह्णन्तु । २

अस्मद् गृहे वसतां द्विपदां चतुष्पदां च नीरोग पूर्णायुष्य सिद्धिप्रदो भूयादिति+न्तु । ३

सर्वदा सर्वकार्येषु विजयप्राप्तिः भू + न्तु । ४

उत्तरे कर्मणि अविघ्नमस्तु इति भवन्तोऽनुगृह्णन्तु । ५

सर्वे जनाः सुखिनो भवन्तु ६

समस्त सन्मंगळानि सन्तु ७

उत्तरोत्तराभिवृद्धिरस्तु ८

नन्दिकेश्वरपूजा :—ओं भूर्भुवः सुवरोम् अस्मिन् बिम्बे नन्दिकेश्वरं ध्यायामि । आवाहयामि । गन्धपुष्पधूपदीपैः सकलाराधनैः स्वर्चितम् ।

वाण रावण चण्डेश नन्दि भृंगिरिटादयः ।
महादेवप्रसादोऽयं सर्वे गृह्णन्तु शाम्भवाः ॥

नन्दिकेश्वराय नमः, निर्माल्यदेवताभ्यो नमः शिवनिर्माल्य समर्पयामि । समस्तोपचारान् समर्पयामि ।

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपति ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् । ओं हर ओं हर !! ओं हर !!! (इति त्रिवारम् उच्चरेत्)



अनन्तरं श्रीशक्तिपञ्चाक्षरी मन्त्रं किञ्चित् जपेत् ।

हृत्पद्मकर्णिकामध्यम् उमया सह शङ्कर ।
प्रविश त्वं महादेव सर्वैरावरणैः सह ॥

(इति शिवनिर्माल्यम् आघ्राय स्तोत्रादिकं पठेत्)

यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु ।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

अनेन पूजाविधानेन भगवान् सर्वात्मकः सपरिवारः श्रीसाम्बपरमेश्वरः प्रीयताम् ।

ओं तत् सत् ब्रह्मार्पणमस्तु ।

तीर्थप्रसादनिषेवणम् ।

शंखमध्ये स्थितं तोयं भ्रामितं केशवोपरि ।
अङ्गलग्नं मनुष्याणां ब्रह्महत्या युतं दहेत् ॥—

इति शंखतीर्थं प्रोक्ष्य

साळग्रामशिलावारि पापहारि शरीरिणाम् ।
आजन्मकृतपापानां प्रायश्चित्तं दिने दिने ॥
अकालमृत्युहरणं सर्वव्याधि निवारणम् ।
सर्वपापक्षयकरं शिवपादोदकं शुभम् ॥

इति तीर्थं पीत्वा ; प्रसादं धारयेत् ॥

॥ इति शिवपञ्चायतन पूजा ॥

शुभमस्तु